Approved by The Text Book Committee

LAGHU GADYA SANGRAHA
SERIES
II

# KADAMBARI.

SECOND EDITION

BY

Pandit, R. V. KRISHNAMACHARIAR,
ABHINAVA BHATTA BANA.

SRI KOMALAMBA PRESS.
KUMBAKONAM.

1925.

PRICE.] [6 ANNAS.

Prescribed for S. S. L. C. as A & B. Group text.

॥ श्रीः ॥

लघुगद्यसंग्रह रत्नमालायाः

द्वितीयं रत्नं

# ॥ कादम्बरी ॥

अभिनवभट्टबाणेन

श्रीवत्सचक्रवर्तिना

रा. च. वि. कृष्णमाचार्येण

संगृहीता



कुम्भघोणस्थ

श्रीकोमलाम्बामुद्रायन्त्रालये

मुद्रापिता ॥

( द्वितीयं मुद्रणम् । )

मूल्यम् ] १९२५ [ षट् कलाः

|| श्रीः ||

# || कादम्बरी ||

आसीद्विदिशाभिधानायां राजधान्यां राजा शूद्रको नाम ||

एकदा तु काचन चाण्डालकन्यका पञ्जरस्थं शुकमादाय आस्थानमण्डपगतं राजानमुपसृत्य प्रणनाम । न्यवेदयच्च—“देव! विदितसकलशास्त्रार्थोऽयं वैशम्पायनो नाम शुकः । तदयमात्मीयः क्रियताम्” इति ||

तदा स विहंगमो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणं जयशब्दमकरोत् ||

राजा तु संजातविस्मयः, “आवेदयतु भवानादितः प्रभृति आत्मनो जन्म । कस्मिन् देशे भवान् कथं जातः? का माता? कस्ते पिता? कथं शास्त्राणां परिचयः? कथं पञ्जरबन्धः? अपनयतु भवान् नः कुतूहलम्” इति पप्रच्छ ||

वैशम्पायनस्तु सादरमब्रवीत्– अस्ति मध्यदेशालंकारभूता विन्ध्याटवी नाम । तस्यां भगवतो महामुनेरगस्त्यस्य सरिता गोदावर्या परिगतमाश्रमपदमासीत् । तस्य च नातिदूरे अगाधम्, अप्रतिमम्, अस्ति पम्पाभिधानं पद्मसरः । तस्य च पश्चिमे तीरे बभूव महान् जीर्णः शाल्मलीवृक्षः ||

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसंधिषु च नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवस-

न्ति स्म। एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पितुरहमेव एकः सूनुरभूवम् । जननी च मे प्रसववेदनया लोकान्तरमगमत्। दुःखितोऽपि तातः सुतस्नेहादन्तर्निगृह्य शोकम्, एकाकी मत्संवर्धनपर एवाभवत् ॥

एकदा तु स्पष्टे जाते प्रत्युषसि, मृगयासक्तस्य महतो जनसमूहस्य क्षोभितकाननं कोलाहलमशृणवम् । अभिमुखमापतच्च शबरसैन्यमद्राक्षम् ॥

तत्र एको जरच्छबरः सोपानैरिव शाखाभिरयत्नेनैव तं शाल्मलीपादपमारुह्य, शुकशावकानपगतासून् कृत्वा क्षितावपातयत् । तातस्तु पक्षसंपुटेनाच्छाद्य मां किंकर्तव्यतामूढस्तस्थौ । असावपि पापः कोटरादाकृष्य तातमपगतासुमकरोत् । उपरतं च तमवनितले अधोमुखममुञ्चत् । अहमपि तच्चरणान्तराले प्रवेशितशिरोधरस्तेनैव सहापतम् । सावशेषत्वादायुषो मे नाङ्गान्यशीर्यन्त। मां तु लब्धजीविताशं बलवती पिपासा परवशमकरोत् ॥

अत्रान्तरे सरसो नातिदूरवर्तिनि तपोवने प्रतिवसन् हारीतनामा जाबालेस्तनयः, तदेव कमलसरः सिष्णासुरुपागमत् ॥

स च मां तदवस्थमालोक्य समुपजातदयः सरस्तीरमानाय्य, अङ्गुल्या कतिचित्सलिलबिन्दूनपाययत्। अभिषेकावसाने च मां गृहीत्वा तपोवनाभिमुखं शनैरगच्छत् ॥

गत्वा च मामेकदेशे स्थापयित्वा, हारीतः पितुः पा-

द्दावुपगृह्य, अनतिसमीपवर्तिनि कुशासने समुपाविशत् । किंचिदुपजातकुतूहलो जाबालिर्मामतिप्रशान्तया दृशा दृष्ट्वा "स्वस्यैवाविनयस्य फलमनेनानुभूयते" इत्यवोचत् ॥

"भगवन् ! कीदृशोऽनेन अविनयः कृतः ? क्व वा कृतः ? किमर्थं वा कृतः ? जन्मान्तरे वा कोऽयमासीत्" इत्युपयाच्यमानस्तपोधनपरिषदा स महामुनिः प्रत्यवदत् ॥

अस्ति सकलत्रिभुवनललामभूता अवन्तिषु उज्जयिनी नाम नगरी । तस्यां च नलनहुषदशरथप्रतिमः परिहृतप्रजापीडः तारापीडो नाम राजाभूत् । तस्य च राज्ञः सर्वकार्येष्वाहितमतिरमात्यो ब्राह्मणः शुकनासो नामासीत् । अथ तस्य सकलान्तःपुरप्रधानभूता महिषी विलासवती नामाभूत् ॥

स च जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ । एकं तु सुतमुखदर्शनसुखं न लेभे । यथा यथा च यौवनमतिचक्राम, तथा तथा अनपत्यताजन्मा अवर्धतास्य संतापः ॥

एवं च गच्छति काले, कदाचिद्राजा क्षीणभूयिष्ठायां रजन्याम् , स्वप्ने विलासवत्या आनने शशिनं प्रविशन्तमद्राक्षीत् । प्रबुद्धश्चोत्थाय, तस्मिन्नेव क्षणे समाहूय शुकनासम् , तस्मै तं स्वप्नमकथयत् । स तं समुपजातहर्षः "देव ! संपन्नाः सुचिरादस्माकं प्रजानां च मनोरथाः । अद्य खलु मयापि निशि स्वप्ने दिव्याकृतिना द्विजेन विकचं पुण्डरीकमुत्सङ्गे मत्प्रणयिन्या मनोरमाया निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रपातीनि शुभानि निमित्तानि" इति प्रत्युवाच ॥

कतिपयदिवसापगमे च देवताप्रसादाद्विवेश गर्भो विलासवतीम् ॥

ततः क्रमेण पूर्णे प्रसवसमये, पुण्येऽहनि, प्रशस्तायां वेलायाम, विलासवती सुतमसूत । तदैव शुकनासस्यापि तनयो जातः ॥

अतिक्रान्ते च षष्ठीजागरे प्राप्ते दशमेऽहनि, पुण्ये मुहूर्ते, राजा स्वसूनोः स्वप्नानुरूपमेव चन्द्रापीड इति नाम चकार। अपरेद्युः शुकनासोऽपि आत्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे ॥

तारापीडः क्रीडाव्यासङ्गविघातार्थं बहिर्नगराद्विद्या-मन्दिरमकारयत्। अखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयांबभूव।

चन्द्रापीडोऽप्यनन्यहृदयतया अचिरेणैव कालेन सर्वा विद्या जग्राह। वैशम्पायनोऽपि सर्वाभिःकलाभिस्तमनुचकार॥

एवं च अधीताशेषविद्यं समारूढयौवनारम्भं चन्द्रापी-डमानेतुं बलाधिकृतं बलाहकनामानं तारापीडः प्राहिणोत् ॥

स गत्वा विद्यागृहम्, उपसृत्य चन्द्रापीडं दर्शितावि-नयो व्यजिज्ञपत्— "कुमार! महाराजः समाज्ञापयति— 'पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि । अनुमतोऽसि निर्गमाय विद्यागृहात्सर्वाचार्यैः। उपगृहीतशिक्षं पौर्णमासी-शशिनमिव नवोद्गतं पश्यतु त्वां जनः' इति । महाराजेन प्रेषित इन्द्रायुधनामा तुरंगमो द्वारि तिष्ठति। एष खलु देवस्य

पारसीकाधिपतिना 'जलधिजलादुत्थितमयोनिजमिदमश्वरत्नम्' इति संदिश्य प्रहितः । तदयमनुगृह्यतामधिरोहणेन " इति ॥

अथ चन्द्रापीडो निर्गत्य विद्यागृहात्, तं तुरंगममारुह्य, नगराभिमुखः प्रतस्थे । क्रमेण च चन्द्रापीडो राजद्वारमासाद्य तुरंगमादवततार । अवतीर्य च करतलेन करे वैशम्पायनमवलम्ब्य, बलाहकेनोपदिश्यमानमार्गो राजकुलं प्रविश्य, पितरं प्रणम्य, तेन विसर्जितः, अन्तःपुरमागत्य मातरं ननाम ॥

निर्गत्य च राजकुलादिन्द्रायुधमारुह्य, शुकनासं द्रष्टुमयासीत् । प्रविश्य शुकनासभवनम्, दूरावनतेन शिरसा शुकनासं ववन्दे । विसर्जितश्च तेन, वैशम्पायनमातरं मनोरमां दृष्ट्वा, निर्गत्य इन्द्रायुधमारुह्य, पित्रा पूर्वकल्पितं भवनं जगाम॥

अपरेद्युश्च प्रभातसमय एव कैलासनामा कञ्चुकी कयाचिदनुगम्यमानः कन्यकया, समुपसृत्य, "कुमार ! इयं खलु कुलूतेश्वरदुहिता पत्रलेखाभिधाना महाराजेन पूर्वं वन्दीजनेन सहानीता । देव्या च दुहितृनिर्विशेषं संवर्धिता । तदियमुचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा देव्या प्रेषिता" इत्यभिधाय जगाम । पत्रलेखा तु ततः प्रभृति छायेव राजसूनोः पार्श्वं न मुमोच ॥

ततः कतिपयदिवसापगमे च, राजा स्वयमुत्क्षिप्तमङ्गलकलशः, सह शुकनासेन, पुण्येऽहनि, मन्त्रपूतेन वारिणा सुतमभिषिषेच । अनन्तरमुपगम्य सभामण्डपम्, काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह ॥

आरूढस्य चास्य दिग्विजयप्रयाणशंसी दुन्दुभिर्दध्वान। ततो दुन्दुभिरवमाकर्ण्य, आस्थानमण्डपाद्विनिर्गतश्चन्द्रापीडः प्रथममेव शातक्रतवीमाशामभिप्रथस्थे। वैशम्पायनोऽपि उपपादितप्रस्थानमङ्गलोऽस्य समीपमाजगाम॥

उच्चलितश्च चन्द्रापीडः प्रथमं प्राचीम्, ततस्त्रिशङ्कुतिलकाम, ततो वरुणलाञ्छनाम, ततः सप्तर्षितारा शबलां दिशं विजिग्ये। वर्षत्रयेण च सकलमेव बभ्राम महीमण्डलम्। ततः कदाचित्कैलाससमीपचारिणां हेमकूटधाम्नां किरातानां सुवर्णपुरं नाम निवासस्थानं जित्वा जग्राह। तत्र च निजबलस्य विश्रामहेतोः कतिपयान् दिवसानतिष्ठत्॥

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य, मृगयानिर्गतो विचरन्काननम्, शैलशिखरादवतीर्णं यदृच्छया किंनरमिथुनमद्राक्षीत्। कृतग्रहणाभिलाषश्च तत्पलायमानं सुदूरमनुससार। तच्चानुबध्यमानं किंनरमिथुनं संमुखापतितमचलतुङ्गशिखरमारुरोह॥

आरूढे च तस्मिन्, तदनुसारिणीं निवर्त्य दृष्टिम्, स्वयमेव विहस्याचिन्तयत्— "किमिति निरर्थकमयमात्मा मया शिशुनेव आयासितः? किमनेन गृहीतेन अगृहीतेन वा किंनरमिथुनेन प्रयोजनम? अहो मे मूर्खतायाः प्रकारः। न चागच्छता मया महावनेऽस्मिन्पन्था निरूपितः, येन प्रतिनिवृत्य गच्छामि। तदिदानीं स्वयमेवोत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशामङ्गीकृत्य गन्तव्यम। आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव" इत्यवधार्य, तुरंगमं व्यावर्तयामास॥

व्यावर्तिततुरगश्च "अयं भगवान्भानुरधुना नभोमध्यमलंकरोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनं स्नातपीतोदकमपनीतश्रमं च कृत्वा, स्वयं च सलिलं पीत्वा, मुहूर्तमात्रं विश्रम्य, ततो गमिष्यामि" इति चिन्तयित्वा, सलिलमन्वेषयन्मुहुर्मुहुरितस्ततो दत्तदृष्टिः, पूर्वोत्तरे दिग्भागे कस्यचन तरुखण्डस्य मध्यभागे, अदृष्टान्तम् अतिमनोहरम् अच्छोदं नाम सरो दृष्टवान् ॥

तस्य च दक्षिणं तीरमासाद्य, व्यपगतपर्याणमिन्द्रायुधं सरोऽवतार्य, पीतसलिलमिच्छया स्नातं चोत्थाप्य, समीपवर्तिनस्तरोर्मूलशाखायां बद्ध्वा, पुनरपि सलिलमवततार ॥

ततश्च प्रक्षालितकरयुगलः कृत्वा जलमयमाहारं सरःसलिलादुदगात् । मुहूर्तं विश्रान्तश्च, तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तं वीणातन्त्रीझंकारमिश्रममानुषं गीतशब्दमशृणोत् । श्रुत्वा च समुपजातकुतूहलः, पश्चिमया सरस्तीरवनलेखया, निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ॥

क्रमेण च गत्वा तं प्रदेशम्, भगवतः शूलपाणेः शून्यमायतनमपश्यत् । तत्र प्रविश्याद्राक्षीच्चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकम् । तस्य च दक्षिणां मूर्तिमाश्रित्य अभिमुखीमासीनाम्, उपरचितब्रह्मासनाम्, ब्रह्मसूत्रेण पवित्रितकायाम्, उत्सङ्गगतां च दन्तमयीं वीणामास्फालयन्तीम्, निर्ममां निरहंकारां प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श ॥

अथ गीतावसाने सा कन्यका समुत्थाय प्रदक्षिणीकृत्य

कृतहस्तप्रणामा, परिवृत्य चन्द्रापीडमाबभाषे — "स्वागतमतिथये। कथमिमां भूमिमनुप्राप्तो महाभागः। तदुत्तिष्ठ। आगम्यताम्। अनुभूयतामतिथिसत्कारः" इति॥

एवमुक्तश्च चन्द्रापीडस्तां व्रजन्तीमनुव्रजन्, गुहां गतः, सर्वामतिथिसपर्यां सप्रश्रयं प्रतिजग्राह। क्षणमिव तूष्णीं स्थित्वा तया परिपृष्टः क्रमेण दिग्विजयादारभ्य सर्वमात्मनो वृत्तान्तमाचचक्षे॥

अथ परिसमापिताहारां निर्वर्तितसंध्योचिताचारां शिलातले विस्रब्धमुपविष्टां निभृतमुपसृत्य, "भगवति! मानुषतासुलभो लघिमा मां प्रश्नकर्मणि नियोजयति। क्वेदं वयः। क्वेयमाकृतिः। क्व चायं लावण्यातिशयः। क्वेयमिन्द्रियाणामुपशान्तिः। तदद्भुतमिव मे प्रतिभाति। किमर्थं वा नवे वयसि व्रतग्रहणम्। आवेदयतु भवती सर्वम्" इति सविनयमन्वयुङ्क्त॥

अथ सा कथयितुमारेभे— अस्ति भारतवर्षादुत्तरेण किंपुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम। तत्र च गन्धर्वकुलाधिपतिर्हंसः प्रतिवसति। स च गौरीं नामाप्सरसं प्रणयिनीमकरोत्। तयोश्च महात्मनोरहमीदृशी शोकाय केवलमेकैवात्मजा समुत्पन्ना। क्रमेण च कृतं मे वपुषि नवयौवनेन पदम्॥

अथैकदा अहमम्बया सह अच्छोदं सरः स्नातुमभ्यागमम्। अत्र च रमणीयमिदं तीरतरुतलमिति सह सखीजनेन व्यचरम्॥

एकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतम्, अभिभूतान्यपरिमलं कुसुमगन्धमभ्यजिघ्रम्। "कुतोऽयम्" इत्युपारूढकुतूहला च कतिचित्पदानि गत्वा, अतितेजस्विनम्, आत्मानुरूपेण सवयसा परेण तापसकुमारेणानुगम्यमानम्, अतिमनोहरं स्नानार्थमागतमेकं मुनिकुमारकमपश्यम् ॥

दृष्ट्वा च तेन कर्णावतंसीकृतामदृष्टपूर्वां कुसुममञ्जरीम्, "अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमलः" इति विचिन्तयन्तीमेव मां रूपैकपक्षपाती नवयौवनसुलभः कुसुमायुधः परवशामकरोत् ॥

अथ कृतप्रणामायां मयि, दुर्लङ्घ्यशासनतया मनोभुवः, चपलतया मनोवृत्तेः, तथा भवितव्यतया च तस्य तस्य वस्तुनः, तमपि प्रदीपमिव पवनस्तरलतामनयदनङ्गः ॥

प्राप्तप्रसरा चोपसृत्य तं सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्— "भगवन्! किमभिधानोऽयम्? कस्य चायम्? किंनाम्नस्तरोरनेनावतंसीकृता मञ्जरी" इति ॥

स तु मामीषद्विहस्याब्रवीत्— अस्ति खलु महामुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्य च मन्दाकिनीमवतरतस्त्रिभुवनसुन्दरं रूपमास्वादयन्त्याः पुण्डरीकोपविष्टाया देव्या लक्ष्म्याः सद्य एव कुमार एष पुण्डरीकनामा समुदपादि। इयं च पारिजातपादपस्य मञ्जरी। अहं चास्य सखा कपिञ्जलो नाम"॥

इत्युक्तवति तस्मिन्, स तपोधनयुवा, "गृह्यतामियम्" इत्युक्त्वा, मदीये श्रवणपुटे तामकरोत्। स च तदा स्वकर-

तलादक्षमालां गलितामपि नाज्ञासीत् । अथाहं तामसंप्राप्ता-मेव भूतलमक्षमालां गृहीत्वा कण्ठाभरणतामनयम् ॥

इत्थंभूते च व्यतिकरे, " भर्तृदारिके ! स्नाता देवी । तत्क्रियतां मज्जनविधिः" इति छत्रग्राहिण्या वचनेन स्नातुम-वातरम् । उत्थाय च कथमपि अम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम् ॥

अथ लोहितायति रविबिम्बे, तस्य सखा कपिञ्जलः समागत्य मामेवमब्रवीत्--"राजपुत्रि ! किं ब्रवीमि । वागेव मे नाभिधेयविषयमवतरति त्रपया । अस्ति- भवत्याः समक्ष-मेव मकरकेतुना क्षणेनायमवस्थान्तरमप्रतीकारमुपनीतः । अकालान्तरक्षमश्चायमस्य मदनाविकारः । सततमतिगर्हिते-नाकृत्येनापि रक्षणीयान्मन्यन्ते सुहृदसून्साधवः । तदुला-गतोऽहम् । तदेवमवस्थिते, यदत्र अवसरप्राप्तम् , अस्मदा-गमनस्य चानुरूपम् , तत्र प्रभवति भवती"इत्यभिधाय ययौ ॥

अथास्तमुपगते सवितरि, मदीयताम्बूलकरङ्कवाहिन्या तरलिकयानुगम्यमाना, प्रासादशिखरादवतीर्य, यस्मिन्प्रदेशे स आस्ते, तमुद्देशमुपागमम् । तस्मिन्नेव चास्य सरसः पश्चिमे तटे, पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षयम् ॥

"तरलिके ! किमिदम्" इत्यभिदधाना, तदभिमुख-मतित्वरितं गच्छन्ती, " हा हतोऽस्मि । हा दग्धोऽस्मि । हा किमिदमापतितम् । अन्धोऽस्मि संवृत्तः । शून्या मे दिशो जाताः " इति विलपन्तं कपिञ्जलमश्रौषम् । तच्च श्रुत्वा,

त्वरितैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे, तं प्रदेशं गत्वा, कपिञ्जलेन कण्ठे परिष्वक्तं तत्क्षणगतजीवितं तमहं पापकारिणी महाभागमद्राक्षम् ॥

दृष्ट्वा च "हा अम्ब, हा तात, हा सख्यः" इति व्याहरन्ती ग्रहगृहीतेव व्यलपम् ॥

ततश्च तथाभूते तस्मिन्नवस्थान्तरे मरणैकनिश्चया, "अयि ! काष्ठान्याहृत्य विरचय चिताम्" इति तरलिकामब्रवम् ॥

अत्रान्तरे, कुमुदधवलदेहः कोऽपि पुरुषश्चन्द्रमण्डलविनिर्गतो गगनादवतीर्य, बाहुभ्यां तमुपरतमुत्क्षिपन्, "वत्से महाश्वेते ! न परित्याज्यास्त्वया प्राणाः । पुनरपि तवानेन सह समागमो भविष्यति" इत्यभिधाय, सहैवानेन गगनतलमुदपतत् ॥

अहं तु सभया सविस्मया "किमिदम्" इति कपिञ्जलमपृच्छम् । असौ तु ससंभ्रमम् "दुरात्मन् ! क मे वयस्यमपहृत्य गच्छसि" इत्यभिधाय, उत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात् । कपिञ्जलप्रत्यागमनकाङ्क्षया च तस्मिन्काले नोत्सृष्टवती जीवितम् ॥

प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा, कृतनिश्चया, तत्प्रीत्या तमेव कमण्डलुमादाय, तान्येव वल्कलानि तामेव चाक्षमालां गृहीत्वा, परित्यज्य सह परिजनेन बन्धुवर्गम्, अस्यामेव गुहायां सह तरलिकया दीर्घशोकमनुभवन्ती चिरं वसामि" इत्यभिधाय, उन्मुक्तकण्ठमुच्चैः प्रारोदीत् ॥

चन्द्रापीडस्तु तस्या रूपेण विनयेन दाक्षिण्येन मधुरालापतया निःसङ्गतया शुचितया च उपारूढगौरवः, मृदुभिरुपसान्त्वनैः संस्थाप्य ताम्, निर्झरजलेन अञ्जलिपुटोपनीतेन अनिच्छन्तीमपि बलात्प्रक्षालितमुखीमकारयत्। पप्रच्छ च–"भगवति ! सा तव परिचारिका वनवासव्यसनमित्रं तरलिका क्व गता" इति ॥

अथ साकथयत्— "महाभाग ! गन्धर्वाधिराजस्य चित्ररथस्य मदिरायां नामाप्सरसि प्रणयिन्यामुदपादि कादम्बरी इति नाम्ना दुहितृरत्नम्। सा च मे जन्मतः प्रभृति द्वितीयमिव हृदयं बालमित्रम्। सा चाधुनैव मदीयेन वृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्—नाहं कथंचिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामीति। सर्वं च तदात्मदुहितुर्निश्चलभाषितं कर्णपरंपरया चित्ररथः स्वयमशृणोत्। गच्छति काले, समुपारूढनिर्भरयौवनां तामालोक्य, चित्ररथः समवधार्य मदिरया, "कादम्बरीमनुनेतुं त्वं शरणम्" इति संदिश्य मत्समीपं कञ्चुकिनं प्रेषितवान्। ततो मया 'सखि कादम्बरि ! जीवन्तीमिच्छसि चेन्माम्, तत्कुरु गुरुवचनमवितथम्' इति संदिश्य कञ्चुकिना सार्धं तरलिका विसर्जिता" इति ॥

अथ क्षीणायां क्षपायाम्, केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना तरलिका प्रत्युषस्येव प्रादुरासीत्। व्यजिज्ञपच्च —"भर्तृदारिके ! दृष्टा विज्ञापिता च संदेशं भर्तृदारिका

कादम्बरी । सा च 'सखि महाश्वेते ! यदियमागत्य माम-
वदत्तरलिका, तत्कथय, किमयं गुरुजनवचनानुरोधः? किमिदं
मच्चित्तपरीक्षणम? किं वा प्रकोपः ? तदयमञ्जलिरुपरचितः,
प्रणामोऽयम, इदं च पादग्रहणम । अनुगृहाण माम् । मा कृथाः
स्वप्नेऽपि पुनरिममर्थं मनसि' इत्यभिधाय तूष्णीमभूत् " इति॥

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य, "गच्छ, स्वय
मेवाहमागत्य यथार्हमाचरिष्यामि ' इत्युक्त्वा केयूरकं
प्राहिणोत् ॥

गते केयूरके, " राजपुत्र ! रमणीयो हेमकूटः । चित्रा
च चित्ररथराजधानी । पेशलो गन्धर्वलोकः । सरलहृदया महा-
नुभावा च कादम्बरी । तदितो मयैव सह गत्वा हेमकूटम्, दृष्ट्वा
च कादम्बरीम् , एकमहो विश्रम्य, श्वोभूते प्रत्यागमिष्यसि"
इत्युक्तवतीं महाश्वेताम्, "भगवति ! दर्शनात्प्रभृति परवा-
नयं जनः । कर्तव्येषु यथेष्टं नियुज्यताम् " इत्यभिधाय तया
सहैवोदचलत् ॥

क्रमेण च गत्वा हेमकूटम्, आसाद्य च कुमारीपुराभ्यन्त-
रम्, " कोऽसौ ? कस्य वापत्यम् ? कियद्वा वयः ? किमय-
मत्रागमिष्यति ?" इति मुहुर्मुहुः स्वसंबद्धालापं केयूरकं पृच्छ-
न्तीं कादम्बरीं ददर्श ॥

तस्य तु दृष्टकादम्बरीवदनचन्द्रलेखालक्ष्मीकस्य सा-
गरस्येवामृतमुल्लास हृदयम् । तदा तस्या अपि " नूनमयं
स केयूरकेणावेदितः " इति चिन्तयन्त्या रूपातिशयविलोकन-

विस्मयस्मेरं निश्चलनिबद्धलक्ष्यं चक्षुस्तस्मिन् सुचिरं पपात॥

ततः कादम्बरी कृच्छ्रादिव दत्तकतिपयपदा, महाश्वेतां स्नेहनिर्भरं कण्ठे जग्राह। महाश्वेतापि "सखि कादम्बरि! अस्ति भारते वर्षे राजा तारापीडो नाम। तस्यायं चन्द्रापीडो नाम सूनुर्दिग्विजयप्रसङ्गेन अनुगतो भूमिमिमाम्। एष च दर्शनात्प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः। कथिता चास्य मया बहुप्रकारं प्रियसखी। तद् अपूर्वदर्शनोऽयमिति विमुच्य लज्जाम्, अविज्ञातशील इत्यपहाय शङ्काम्, यथा-मयि, तथात्रापि वर्तितव्यम्। एष ते मित्रं च, बान्धवश्च।" इति तामवादीत्॥

कादम्बरी च सविभ्रमकृतप्रणामा, चन्द्रापीडाय ताम्बूलमदात्। गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत्॥

अत्रान्तरे "आयुष्मति, देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयतः" इति कञ्चुकिना समभिहिता महाश्वेता गन्धर्वराजं द्रष्टुं ययौ॥

चन्द्रापीडोऽपि तयैव सह निर्गत्य, पूर्वदृष्टेन केयूरकेणोपदिश्यमानमार्गः, क्रीडापर्वतमणिमन्दिरमगात्। प्रविश्य च मणिगृहम्, मुहूर्तमिव स्थित्वा, निर्गम्य, उपवनालोकनकुतूहलाक्षिप्तचित्तः, क्रीडापर्वतशिखरमारुरोह॥

कादम्बरी तु अनङ्गाक्षिप्तचित्ता, सौधस्योपरितनं तलमारुह्य, विहस्य तं विलोकयन्ती तेन च विलोक्यमाना, महान्तमपि कालप्रतिक्रान्तं नाज्ञासीत्। प्रतीहार्या च निवेदित-

महाश्वेताप्रत्यागमना, तस्मादवततार ॥

चन्द्रापीडोऽपि तस्मादवतीर्य, निर्वर्तितस्नानविधिः, अर्चिताभिमतदैवतः, क्रीडापर्वतक एव सर्वमाहारादिकमहः-कर्म चक्रे ॥

क्रमेण च कृताहारः क्रीडापर्वतकप्राग्भागभाजि मनोहारिणि मरकतशिलातले समुपविष्टः, अद्राक्षीत अनल्प-कन्यकाकदम्बपरिवृतां चन्दनानुलेपनसनाथं नालिकेरसमुद्र-कमुद्वहन्त्या कादम्बरीप्रतीहार्या दत्तहस्तावलम्बां केयूरकेण च निश्वासहार्ये दुकूले दधता निवेद्यमानमार्गां करतलक-लितमालतीकुसुमदामया च तमालिकया अनुगम्यमानाम् आगच्छन्तीं कादम्बर्याः सखीं मदलेखाम, तस्याश्च समीपे तरलिकाम्, तया च सितांशुकोपच्छदे पटलके गृहीतं प्रभा-वर्षिणमतितारं हारम् ॥

दृष्ट्वा चायं दूरादेव प्रत्युत्थानादिना समुचितेनोपचार-क्रमेण मदलेखामापतन्तीं प्रतिजग्राह । सा तु तस्मिन्नेव मर-कतग्रावाणि मुहूर्तमुपविश्य, स्वयमुत्थाय, तेन चन्दनाङ्गरा-गेण अनुलिप्य ते च द्वे दुकूले परिधाप्य, तैश्च मालतीकुसु-मदामभिरारचितशेखरं कृत्वा, तं हारमादाय तस्य वक्षःस्थले बबन्ध ॥

चन्द्रापीडस्तु विस्मयमानः, कादम्बरीसंबद्धाभिरेव कथाभिः सुचिरं स्थित्वा विसर्जयांबभूव मदलेखाम् ॥

अथ शनैःशनैरदर्शनमुपगते भगवति गभस्तिमालिनि,

जातायां चादर्शनक्षमायां वेलायाम्, तस्मिन्नेव शिलातले सितदुकूलवितानतलास्तीर्णे शयनीयमधिशयानः, क्षणादिव क्षपां क्षपितवान् ॥

अथ समुद्गते सवितरि, शिलातलादुत्थाय चन्द्रापीडः प्रक्षालितमुखकमलः कृतसंध्यानमस्कृतिः, गन्धर्वराजतनयामालोकयितुमाजगाम । ददर्श च मन्दरप्रासादस्याधस्तादङ्गनसौधवेदिकायां महाश्वेतां पठ्यमाने सर्वमङ्गलमहीयसि महाभारते दत्तावधानां कादम्बरीं च ॥

समुपसृत्य स्थित्वा च कंचित्कालम्, चन्द्रापीडो जिगमिषुः, "देवि, किं ब्रवीमि । बहुभाषिणो न श्रद्दधाति लोकः। स्मर्तव्योऽस्मि परिजनकथासु" इति कादम्बरीमभिधाय, तस्याश्च प्रेमस्निग्धेन चक्षुषा मनसा च गृह्यमाणः कन्यकान्तःपुरान्निर्गम्य, क्रमेण प्राप्य महाश्वेताश्रमम्, अच्छोदसरस्तीरे संनिविष्टेन इन्द्रायुधखुरपुटानुसारेणैव आगतेनात्मस्कन्धावारवर्तिना जनेन प्रणम्यमानः, स्वभवनं विवेश ॥

अपरेद्युश्च समुत्थिते रवौ प्रतीहारेण सह प्रविशन्तं केयूरकं प्रथमं चक्षुषा ततो हृदयेन पश्चाद्भुजाभ्यां गाढमालिलिङ्ग । उपावेशयच्चात्मनः समीप एव । असौ तु नलिनीपत्रपुटमुद्राव्य कादम्बरीप्रहितान्यभिज्ञानान्यदर्शयत् । अब्रवीच्च—"देव ? श्रूयताम्—निर्गते त्वयि देवी कादम्बरी तमेव क्रीडापर्वतकमुपेत्य 'देवेनात्र शिलातले स्थितम्, अत्र स्नातम्, अत्र भगवानर्चितः शूलपाणिः, अत्र भुक्तम्, अत्र सुप्तम्'

इति परिजनेन पुनरुक्तं निवेद्यमानानि देवस्यैव स्थानचिह्नानि पश्यन्ती क्षपितवती दिवसम् । अस्तमुपगते च रवौ उदिते चन्द्रमसि, करौ कपोलयोः कृत्वा, किमपि चिन्तयन्ती मुकुलितेक्षणा क्षणमात्रं स्थित्वा, उत्थाय शय्यागृहमगात् । शयननिक्षिप्तगात्रयष्टिश्च, मङ्गलप्रदीपैः कुमुदाकरैश्च सार्धमनिमीलितलोचना दुःखदुःखेन क्षणदामनैषीत्। उषसि च मामाहूय देवस्य वार्ताव्यतिकरोपलम्भाय सोपालम्भमादिष्टवती"इति॥

चन्द्रापीडस्तदाकर्ण्य जिगमिषुः, 'अश्वोऽश्वः' इति वदन् भवनान्निर्ययौ । आरोपितपर्याणमिन्द्रायुधमारुह्य, पश्चादारोप्य पत्रलेखाम् , स्कन्धावारे स्थापयित्वा वैशम्पायनम् , हेमकूटं ययौ । आसाद्य च कादम्बरीभवनद्वारम् , अवतीर्य द्वारपालार्पिततुरङ्गः, प्रविश्य, कुसुमचापरेखामिव मदनारोपितगुणकोटिकान्ततरां मधुमासदेवतामिव शिशिरहारिणीं कादम्बरीं व्यलोकयत् ॥

अथ केयूरकः, "देवि! देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनी" इत्यभिधाय पत्रलेखामदर्शयत् । कादम्बरी तु कृतप्रणामां तां सादरम् 'एह्येहि' इत्यभिधाय आत्मनः समीपे समुपावेशयत् ॥

चन्द्रापीडोऽपि महाश्वेतया सह प्रीत्युपचयचतुराभिः कथाभिर्महान्तं कालं स्थित्वा, स्कन्धावारगमनाय कादम्बरीभवनान्निर्ययौ । निर्गतं च तुरंगममारुरुक्षन्तं पश्चादागत्य केयूरकोऽभिहितवान्-"देव, देवी कादम्बरी पत्रलेखां निवर्त्यमानामिच्छति।

इयं च पश्चाद्यास्यति"इति। आकर्ण्य चन्द्रापीडः, "केयूरक! प्रवेश्यताम्" इत्यभिधाय, पुनः स्कन्धावारमेवाजगाम ॥

प्रविशन्नेव पितुः समीपादागतं लेखहारकमद्राक्षीत्। अथासावुपसृत्य प्रणामानन्तरं लेखद्वितयमर्पयांबभूव। युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमशः पपाठ— "स्वस्ति, उज्जयिनीतः परममाहेश्वरो महाराजाधिराजो देवस्तारापीडः सर्वसंपदामायतनं चन्द्रापीडमुत्तमाङ्गे चुम्बन्नन्दयति। कुशलिन्यः प्रजाः। किंतु कियानपि कालो भवतो दृष्टस्य गतः। बलवदुत्कण्ठितं नो हृदयम्। देवी च सहान्तःपुरैर्ग्लानिमुपनीता। अतो लेखनवाचनविरतिरेव प्रयाणकालतां नेतव्या" इति। शुकनासप्रेषिते द्वितीयेऽप्यमुमेवार्थं लिखितमवाचयत् ॥

अथ "यथाज्ञापयति तातः" इत्युक्त्वा, तथैव च तुरगाधिरूढः प्रयाणपटहमवादयत्। समीपे स्थितं च बलाहकपुत्रं मेघनादनामानमादिदेश—"भवता पत्रलेखया सहागन्तव्यम्। नियतं च केयूरकस्तामादाय एतावतीं भूमिमागमिष्यति।" इति। एवमादिश्य तम्, "सुहृदादि साधनमक्लेशयता शनैः शनैर्गन्तव्यं त्वया" इत्युक्त्वा, वैशम्पायनं स्कन्धावारभरे न्ययुङ्क्त। स्वयमपि च प्रतस्थे ॥

क्रमेण च शून्यया दिवसमटव्या गत्वा, परिणते रविबिम्बे, चिरप्ररूढस्य रक्तचन्दनतरोरुपरि बद्धम्, लिखितनभःस्थलम्, महान्तं रक्तध्वजं दूरत एव ददर्श। तदभिमुखश्च

किंचिदध्वानं गत्वा, जरद्द्रविडधार्मिकेण अधिष्ठितं चण्डिकालयमपश्यत्। अथावतीर्य तुरगात्, प्रविश्य भक्तिप्रवणेन चेतसा तां प्रणनाम ॥

अस्तमुपगते च सप्तसप्तौ, चन्द्रापीडः परिजनेन तत्रैव परिकल्पितं शयनीयमगात्। उषसि चोत्थाय, अभिरमणीयेषु प्रदेशेषु निवसन्, अल्पैरेवाहोभिरुज्जयिनीमाजगाम ॥

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत्। कृतनमस्कारां च चन्द्रापीड उत्थायातिशयदर्शितादरमालिलिङ्ग पत्रलेखाम्। समुपविष्टश्चाब्रवीत्—"पत्रलेखे! कथय, तत्रभवत्या महाश्वेताया समदलेखाया देव्याः कादम्बर्याश्च कुशलम्? कुशली वा सकलस्तमालिकाकेयूरकादिः परिजनः" इति ॥

साब्रवीत्—"देव! यथाज्ञापयसि, भद्रम्। त्वामर्चयति शेखरीकृताञ्जलिना ससखीजना सपरिजना देवी कादम्बरी। ततः खल्वागते देवे, देवी कादम्बरी, मन्मुखे निधाय दृष्टिम्, दीर्घमुष्णं च निःश्वस्य, 'पत्रलेखे! वल्लभतया तस्मिन् स्थाने न तातः, नाम्बा, न महाश्वेता, न मदलेखा, न जीवितम्, यत्र मे भवती। दर्शनात्प्रभृति प्रियासि। कस्य वान्यस्य कथयामि परिभवम्। कथमिव मादृशी कौलीनेन कुलं कलङ्कयिष्यति? अकन्यकोचिते वा चापले चेतः प्रवर्तयिष्यति? साहं न संकल्पिता पित्रा, न दत्ता मात्रा। कातरेवानाथेव गुरुगर्हणीयतां नीता कुमारेण चन्द्रापीडेन' इत्यभिधाय तूष्णीमभूत् ॥

|| श्रीः ||

# || उत्तरभागः ||

अहं तु तच्छ्रुत्वा, 'देवि ! प्रसीद । नार्हस्यखेदार्हा हृदयखेदकारिणं संतापमङ्गीकर्तुम् । संहर मन्युवेगम् । एषाहमादाय चन्द्रापीडमागतैव' इति व्यजिज्ञपम् ॥

'पत्रलेखे ! त्वामेव पश्यन्ती संधारयामि जीवितमहम् । तथापि यद्ययं ते ग्रहः, तत्साधय समीहितम्' इत्यभिधाय मां व्यसर्जयत् ॥

देव ! देवेनाप्येतदवस्थां देवीं दूरीकुर्वता किमिदमापन्नवत्सलायाः स्वप्रकृतेरनुरूपं कृतम् ? " इति ॥

चन्द्रापीडस्तु कादम्बर्याः साभ्यर्थनं च सनिर्वेदं च सानुरागं च तमालापमाकर्ण्य, नितरां पर्याकुलोऽभवत् ॥

कथं कथमपि कतिपयेष्वतिक्रान्तेषु वासरेषु एकदा केयूरकः समागत्य, "देव ! यदैव पत्रलेखां मेघनादाय समर्प्य, प्रतिनिवृत्तेन मया देवस्यायमुज्जयिनीगमनवृत्तान्तो निवेदितः, तदैवोर्ध्वं विलोक्य दीर्घमुष्णं च निःश्वस्य सनिर्वेदम् 'एवमेतत्' इत्युक्त्वोत्थाय, महाश्वेता पुनस्तपसे स्वमेवाश्रमपदमाजगाम। देव्यपि कादम्बरी झटिति हृदये द्रुघणेनेवाभिहता उन्मुक्तेव चान्तःकरणेन त्वदर्थे महान्तमायासमनुभवति " इति सप्रश्रयमगादीत् ॥

इति विज्ञापिते केयूरकेण, दर्शितप्रसादश्चन्द्रापीडः प्रत्युवाच—"केयूरक! किमाकलयसि? यावद्वयं परापतामः, तावत्प्राणान्संधारयिष्यति वा देवी कादम्बरी? तद्गम्यतां देव्याः प्राणसंधारणाय। मदागमनप्रत्ययार्थं च पत्रलेखाप्यग्रतस्त्वयैव सह यातु देवीपादमूलम्। दशपुरं यावत्परागतः स्कन्धावार इति च किंवदन्ती श्रूयते। तत्करतलवर्तिनीं सिद्धिमधुनावधारय। प्राप्तो वैशम्पयनः" इति ॥

निर्गतायां च केयूरकेण सह पत्रलेखायाम्, चन्द्रापीडोऽपि शुकनासमुखेनैव वैशम्पायनप्रत्युद्गमनायात्मानं मोचयित्वा, दशपुरगामिना मार्गेण प्रवृत्तो गन्तुं योजनत्रितयमतिलङ्घ्य, रात्रिप्रयाणकायातं स्कन्धावारमद्राक्षीत् ॥

अथेन्द्रायुधप्रत्यभिज्ञानात् 'देवश्चन्द्रापीडः'इति समन्तात्ससंभ्रमप्रधावितानामुद्बाष्पशून्यदृष्टीनां राजन्यसहस्राणां मुखान्यवलोक्य, शून्यहृदय एव 'क्व वैशम्पायनः'इत्यपृच्छत्॥

ते चैवं पृष्टा व्यज्ञपयन्—"देव! गतवति देवे, अन्यस्मिन्नहनि आहतायां प्रयाणभेर्याम्, प्रातरेवास्मान्वैशम्पायनः 'अतिपुण्यं ह्यच्छोदाख्यं सरः पुराणे श्रूयते। तदस्मिन् स्नात्वा प्रणम्य भगवन्तं महेश्वरं व्रजामः' इत्यभिधाय, चरणाभ्यामेवाच्छोदसरस्तीरमयासीत्। तत्र चातिरम्यतया सर्वतो दत्तदृष्टिः संचरन्, अन्यतमं लतामण्डपं दृष्ट्वा, स्तम्भित इव किमप्यन्तरात्मना स्मरन्निव तूष्णीमधोमुखस्तस्थौ। पुनः पुनश्चागमनायास्माभिरनुरुध्यमानः, परिच्छेदनिष्ठुरमाह स—'मया

तु न यातव्यमस्मात्प्रदेशात् । गच्छन्तु भवन्तः स्कन्धावारमादाय । न युक्तमस्यां भूमौ भवतां क्षणमप्यवस्थानं कर्तुम्' इति ।'किमेतत्' इति तद्वृत्तान्तमेवानुभावयन्तो दिनत्रयं स्थित्वा निष्प्रत्याशा आगता वयम्" इति ॥

चन्द्रापीडस्तु तं स्वप्नेऽप्यनुत्प्रेक्षणीयं वैशम्पायनवृत्तान्तमाकर्ण्य युगपदुद्वेगविस्मयाभ्यामाक्रान्तहृदयः कटकलोकेनैव सह परापतितवानुज्जयिनीम् ॥

अथ दूरत एव निःस्पृहैरपि उदासीनैरपि स्नेहपरवशैः पितृभिरिव सुहृद्भिरिव च नगरीनिर्गतैः, आर्त्या पृच्छ्यमानं च कथ्यमानं च वैशम्पायनवृत्तान्तमेव समन्ताच्छुश्राव ॥

शृण्वंश्च नासानिहितोद्बाष्पदृष्टिः, अदृष्टसर्ववृत्तान्त एव विवेशोज्जयिनीम् । प्रविश्य पितुरपि लज्जमानो वदनमुपदर्शयितुम्, अधोमुख एव शुकनासेन सह प्रणम्य पितरम्, तं दिवसमेकां च यामिनीं कथं कथमप्यस्थात् ॥

अथ वैशम्पायनानयनाय तातेन कथमपि दत्ताभ्यनुज्ञश्चन्द्रापीडः, अग्रतो ढौकितमपि कृतापसर्पणमिन्द्रायुधमारुह्य, अचेतितक्षुत्पिपासातपश्रमोज्जागरव्यथो दिवा रात्रौ चावहत॥

वहंश्च, दृष्टपूर्वमप्यदृष्टपूर्वमिवादत्तदृष्टिसुखं तदेवाच्छोदमुपाहितद्विगुणदुःखमाससाद । "कदाचिदस्य वृत्तान्तस्याभिज्ञा महाश्वेतापि भवत्येव । तत्तां तावत्पश्यामि । ततो यथायुक्तं प्रतिपत्स्ये" इत्यारोप्य हृदये महाश्वेताश्रममुपजगाम । प्रविश्य च गुहाद्वार एव धवलशिलातले समुपविष्टामधोमुखीं कथं

कथमपि तरलिकया विधृतशरीरां महाश्वेतामपश्यत्। 'किमेतत्' इति च तरलिकामपृच्छत् ॥

अथानुपसंहृतमन्युवेगापि गद्गदिकावगृह्यमाणकण्ठा महाश्वेतैव प्रत्यवादीत्—"महाभाग ! किमियमावेदयति वराकी । केयूरकाद्भवदागमनमाकर्ण्य, विदीर्णमानसा पुनः कष्टतरतपश्चरणायात्रैवायाता । तावदत्र महाभागस्यैव तुल्याकृतिर्ब्राह्मणयुवा मामुपसृत्य 'वरतनु ! सर्व एव हि जगति जन्मनो वयस आकृतेर्वा सदृशमाचरन्न वचनीयतामेति । तव पुनर्विसदृशानुष्ठाने कोऽयं प्रयत्नः ? यदि च त्वादृशी जीवलोकसुखेभ्यः पराङ्मुखी तपसा क्लेशयत्यात्मानम् , तदा वृथा वहति धनुरधिज्यं कुसुमकार्मुकः" इत्यब्रवीत् । निवार्यमाणोऽपि नात्याक्षीदेवानुबन्धनम् ॥

अहं तु तदाकर्ण्य आविष्टेवात्मानमप्यचेतयमाना क्रोधावेगरूक्षाक्षरमवदम् —'आः पाप ! कथमेवं गदतो मामुत्तमाङ्गे ते न निपतितं वज्रम ? अवशीर्णा वा न सहस्रधा जिह्वा? येनैव खलु विधात्रा केनाप्युपदर्शितमुखरागः स्वपक्षपातमात्रवृत्तिः शुक इव वक्तुमेवं शिक्षितः, तेनैव किमु तस्यामेव जातौ न निक्षिप्तोऽसि' इत्यभिधाय, चन्द्राभिमुखी भूत्वा कृताञ्जलिः 'भगवन् परमेश्वर लोकपाल ! यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसाप्यपरः पुमान्न चिन्तितः, तदानेन सत्यवचनेनायमलीककामी मदुदीरितायामेव जातौ पततु' इत्यवदम् । स च मे वचसोऽस्यानन्तरमेव छिन्नमूलस्तरुरिव

क्षितावपतत् । अतिक्रान्तजीवितेऽस्मिन्, कृताक्रन्दात्परिजनात् ‘असौ महाभागस्यैव मित्रं भवति’ इति श्रुतवती” इत्युक्त्वा त्रपावनम्रमुखी महीमश्रुवेगेन तूष्णीमेवाप्लावितवती ॥

चन्द्रापीडस्य तु तदाकर्ण्य “भगवति ! कृतप्रयत्नायामपि भगवत्याम्, अपुण्यभाजास्मिन् जन्मनि मया न प्राप्तं देव्याः कादम्बर्याः परिचयसुखम् । तज्जन्मान्तरेऽपि वा भूयात्’ इति गदत एव स्वभावसरसं हृदयमस्फुटत् ॥

अथ ससंभ्रमप्रतिपन्नचन्द्रापीडशरीरायां तरलिकायाम्, तिर्यगाभुग्नचन्द्रापीडमुखनिहितनिश्चलदृष्टिनिश्चेष्टायां महाश्वेतायाम्, “आः पापे दुष्टतापसि! किमिदं त्वया कृतम्” इत्यारटति परिजने, चन्द्रापीडवदननिवेशितदृशि तुरंगमतां मुमुक्षतीव इन्द्रायुधे, पत्रलेखानिवेदितचन्द्रापीडागमना कादम्बरी, व्याजीकृत्य महाश्वेतादर्शनम्, चन्द्रापीडदर्शनायोत्ताम्यन्ती केयूरकेणोपदिश्यमानमार्गा पत्रलेखया मदलेखया च सह तत्रैवाजगाम ॥

आगम्य च उद्धृतामृतमिव रत्नाकरम्, उत्खातकर्णिकमिव कमलम् उन्मुक्तजीवितं चन्द्रापीडं दृष्ट्वा, सहसा “हा हा किमिदम्” इत्यधोमुखी धरातलमुपयान्ती कथं कथमपि मदलेखयाधार्यत ॥

चिराच्च लब्धसंज्ञा कादम्बरी, महाश्वेतां कण्ठे गृहीत्वा “ प्रियसखि ! तवास्ति कीदृश्यपि प्रत्याशा। मम पुनः सर्वतो हताशायाः सापि नास्ति । अहं पुनरिममात्मानं विभावसौ

निर्वापयामि । तदामन्त्रये प्रियसखीं पुनर्जन्मान्तरसमागमाय" इत्यभिधाय, चन्द्रापीडचरणौ कराभ्यामुत्क्षिप्याङ्केन धृतवती॥

अथ तत्करस्पर्शेनोच्छ्वसत इव चन्द्रापीडदेहात्किमपि चन्द्रधवलं ज्योतिरुज्जगाम। अनन्तरं चान्तरिक्षे अशरीरिणी वागश्रूयत— "वत्से महाश्वेते ! पुनरपि त्वं मयैव समाश्वासयितव्या वर्तसे। तत्ते पुण्डरीकशरीरं मल्लोके मत्तेजसाप्याय्यमानमविनाशि भूयस्त्वत्समागमनाय तिष्ठत्येव। इदमपरं शापदोषाद्विमुक्तमप्यन्तरात्मना मत्तेजोमयं स्वत एवाविनाशि चन्द्रापीडशरीरमत्रैव भवत्योः प्रत्ययार्थम् आ शापक्षयादास्ताम्। यत्नतः परिपालनीयम् आ समागमप्राप्तेः" इति ॥

पत्रलेखा तु तेन तस्य ज्योतिषः स्पर्शेन लब्धसंज्ञोत्थाय, परिवर्धकहस्तादाच्छिद्येन्द्रायुधम्, तेनैव सहात्मानमच्छोदसरस्यक्षिपत् ॥

अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरसः सलिलादुद्विग्नाकृतिस्तापसकुमारकः सहसैवोदतिष्ठत्। उत्थाय च दूरत एव विलोकयन्तीं महाश्वेतामुपसृत्य, "गन्धर्वराजपुत्रि ! प्रत्यभिज्ञायतेऽयं जनः, न वा ?" इति पप्रच्छ। सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी, कृतपादपतना "भगवन् कपिञ्जल ! नाहमेवंविधापुण्यवती, या भवन्तमपि न प्रत्यभिजानामि। कथय-केनासावुत्क्षिप्य नीतः ? किं तत्रोपजातम् ? कुतो वा त्वमेकाकी देवेन पुण्डरीकेण विना समागतः" इति प्रत्यवादीत्॥

स तु प्रत्यवादीत्—"श्रूयताम्—अहं हि त्वामेकाकिनीमुत्सृज्य, तं पुरुषमनुबध्नन्, जवेनोदपतम्। स तु मे प्रतिवचनमदत्त्वैव चन्द्रलोकमगच्छत्। तत्र च महोदयाख्यायां सभायाम् इन्दुकान्तमये पर्यङ्के तत्पुण्डरीकशरीरं स्थापयित्वा मामवादीत्—'कपिञ्जल! जानीहि मां चन्द्रमसम्। अहं खल्वनेन ते प्रियवयस्येन कामापराधाज्जीवितमुत्सृजता 'दुरात्मन् इन्दुहतक! यथाहं त्वया प्राणैर्वियोजितः, तथा त्वमपि भारते वर्षे जन्मनि जन्मन्येवोत्पन्नानुरागोऽप्राप्तसमागमसुखः, तीव्रतरां हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसि' इति निरपराधः संशप्तः। अहमप्युत्पन्नकोपः 'त्वमपि मत्तुल्यसुखदुःख एव भविष्यसि' इति प्रतिशापमस्मै प्रायच्छम्। अपगतामर्षश्च विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि। अनेन च स्वयंकृतादेव दोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम्। तद्यावदयं शापादपैति, तावदस्य शरीरस्य विनाशो मा भूदिति मयेदमुत्क्षिप्य समानीतम्। तदिदमत्र मत्तेजसाप्यायमानम् आ शापक्षयात् स्थितम्। अधुना त्वं गत्वैनं वृत्तान्तं श्वेतकेतवे निवेदय। महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियां कांचिदपि करोति' इत्युक्त्वा मां व्यसर्जयत्॥

अहं तु शोकावेगान्धो गीर्वाणवर्त्मनि कमपि वैमानिकमलङ्घयम्। स तु मां दहन्निव निरीक्ष्य 'दुरात्मन्! यत्त्वया अहमुद्दामप्रचारिणा तुरंगमेणेवोल्लङ्घितः, तत्तुरंगम एव भूत्वा मर्त्यलोकमवतर' इत्यब्रवीत्। 'भगवन्! वयस्यशोकान्धेन

त्वं मयोल्लङ्घितो नावज्ञया । तत्प्रसीद । उपसंहर शापम्' इति कृताञ्जलिना मया प्रार्थितः स तु मां पुनरवादीत्– 'यन्मयोक्तम् , तन्नान्यथा भवितुमर्हति । तदेतत्ते करोमि– कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि, तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि । किंच, उज्जयिन्यामपत्यहेतोस्तपस्यतस्तारापीडस्य चन्द्रमसा तनयत्वमुपगन्तव्यम् । वयस्येनापि ते पुण्डरीकेण तन्मन्त्रिण एव शुकनासस्य । त्वमपि चन्द्रात्मनो राजपुत्रस्य वाहनतामुपयास्यसि' इति । अहं तु तद्वचनानन्तरमेवाधः स्थिते महोदधौ न्यपतम् । तस्माच्च तुरंगीभूयैवोदतिष्ठम् । संज्ञा तु मे तुरंगत्वेऽपि न व्यपगता " इति ॥

अथ कादम्बरी "भगवन् ! पत्रलेखया त्वया चास्मिन्सरसि जलप्रवेशः कृतः । तत्किं तस्याः पत्रलेखायाः संवृत्तम्" इति कपिञ्जलमप्राक्षीत् । स तु "राजपुत्रि ! सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः । तदधुना क्व चन्द्रापीडस्य जन्म ? क्व वैशम्पायनस्य ? किं वा पत्रलेखाया वृत्तम् ? इति सर्वस्यास्य वृत्तान्तस्यावगमाय गतोऽहं तातस्य श्वेतकेतोः पादमूलम्" इत्यभिदधान एव गगनमुदपतत् ॥

अथ कादम्बरी, तामखेदार्हां चन्द्रापीडतनुमन्यतरस्मिन् शिलातले शनैः स्थापयित्वा स्नानशुचिर्भूत्वा देवतोचितामपचितिं संपाद्य, निराहारा तं दिवसं क्षपां च क्षपितवती । प्रातश्च तत् उन्मीलितं चित्रमिव चन्द्रापीडशरीरमवलोक्य शनैः शनैः पाणिना स्पृशन्ती " सत्या सा भारती, कपिञ्जलावे-

दितश्च शापवृत्तान्तः" इति निर्वृतेनान्तरात्मना अतिष्ठत् ॥

अथ युवराजश्चिरयतीत्युत्ताम्यता हृदयेन देवेन तारापीडेन वार्ताहराः प्रहिताः। तांश्च मेघनादेन प्रवेशितानन्यदृष्टिश्चिरमिवावलोक्य कादम्बरी, "भद्रमुखाः! परित्यज्यतां शोकावेगः। दृष्टं हि भवद्भिरपि पुरेवाक्षततनोर्देवस्य वदनम्। तद्गम्यतामधुना वार्तोत्सुकमतेर्देवस्य पादमूलम्। कथ्यतां वास्तवं वृत्तम्। परं तु भवद्भिः सहापरः कश्चित् श्रद्धेयवचाः संप्रत्ययाय गच्छतु" इत्यादिश्य त्वरितकनामानं कुमारबालसेवकमाहूय तैः सह व्यसर्जयत् ॥

अथ त्वरितकः सह वार्ताहरैरागत्य, तारापीडाय गमनतः प्रभृति यथावृत्तं कथयितुमारेभे। व्यज्ञापयच्च— "देव! स्फुटितेऽपि हृदये, ध्रियते शरीरेण युवराजः। शापदोषाद्वैशम्पायनस्य युवराजस्य च यथा जन्म, तथा निरवशेषं शृणोतु तावद्देवः" इति ॥

तारापीडस्तु तदद्भुतमाकर्ण्य दत्तावधानस्तेन कथ्यमानं यथादृष्टं यथाश्रुतं च निरवशेषं तत्सर्वमश्रौषीत्। श्रुत्वा च तं वृत्तान्तम् "गमनात् ऋतेऽन्य उपाय एव नास्ति जीवितसंधारणाय" इत्येवमवधार्य, सह शुकनासविलासवतीमनोरमाभिः संततमविच्छिन्नैः प्रयाणैर्वहन्, अवहुभिरेव दिवसैरासंसादाच्छोदम् ॥

अथ सहसैव तच्चन्द्रापीडगुरुजनागमनमाकर्ण्य, धावित्वा ह्रिया महाश्वेता गुहाभ्यन्तरमविशत्, चित्ररथतनयापि

मोहान्धकारम् । तदवस्थयोश्च तयोः, शुकनासावलम्बित-शरीरो राजा विवेशाश्रमपदम् , तदनु मनोरमावलम्बिता विलासवती । प्रविश्य च सहजयैव कान्त्या अविरहितमुपरत-सर्वप्रयत्नं सुप्तमिव तं तनयमालोक्य, चन्द्रापीडमुज्जीवितमेव मन्यमानो नरपतिः सपरिवारः समं देव्या शुकनासेन च तत्रैवातिष्ठत् ॥

तत् यः स कामोपहतचेताः स्वयंकृतादेवाविनयाद्दिव्यलोकतः परिभ्रश्य, मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत् , स एवैष पुनः स्वयंकृतेन अविनयेन महाश्वेताकृतात्सत्याभिध्यानादस्यां शुकजातौ पतित इति ॥

एवं वदत्येव भगवति जाबालौ, बाल्येऽपि मे सुप्तप्रबुद्धस्येव पूर्वजन्मोपात्ताः समस्ता एव विद्या जिह्वाग्रेऽभवन् । मनुष्यशरीरात् ऋते सर्वमन्यत्तत्क्षणमेव मे महाश्वेतानुरागादिकं स्मरणमुपगतम् ॥

अथ भगवान् जाबालिः, "रसाक्षेपादचेतितैवास्माभिः प्रभातप्राया रजनी । प्रत्यासन्ना अग्निविहारवेला " इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् ॥

अथोत्थिते भगवति जाबालौ, प्रातः, कृतज्ञम् अकृतज्ञः, वचनकरम् अनाश्रवः, महात्मानं दुरात्माहं कपिञ्जलं हारीतेन सह समायान्तमद्राक्षम् । दृष्ट्वा च तमवदम्— " अपि कुशलं तातस्य ? मद्वृत्तान्तमाकर्ण्य किमुक्तवान् ? कुपितो न वा ? " इति । स त्वेवमाख्यातवान्–" सखे ! कुशलं तातस्य ।

अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः। प्रतिक्रियायै च कर्म प्रारब्धम् । समारब्ध एव कर्मणि, तुरगभावाद्विमुक्तो गतोऽस्मि तातस्य पादमूलम् । स चाद्य प्रातरेवाहूय मामाज्ञापितवान्— 'वत्स कपिञ्जल? महामुनेर्जाबालेराश्रमपदं मुहूर्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम् । तद्गच्छ संप्रति तं द्रष्टुम् । मदीयया चाशिषानुगृह्य वक्तव्योऽसौ—वत्स ! यावदिदं कर्म परिसमाप्यते, तावत्त्वयास्मिन्नेव जाबालेः पादमूले स्थातव्यम्' इति । अपिच, त्वद्दुःखदुःखिताम्बा ते श्रीरपि तस्मिन्नेव कर्मणि परिचारिका वर्तते । तयापि शिरस्युपाघ्राय एतदेव पुनः पुनः संदिष्टम्" इत्यभिधाय, अन्तरिक्षमतिक्रम्य क्वाप्यदर्शनमगात् ॥

अहं तु कतिपयैरेव दिवसैरुत्पन्नोत्पतनसामर्थ्यः, "गमनक्षमस्तु संवृत्तोऽस्मि । तत्र नाथ चन्द्रापीडोत्पत्तिपरिज्ञानम् । महाश्वेता पुनः सैवास्ते । भवतु, तत्रैव गत्वा तिष्ठामि" इति निश्चित्य एकदा प्रातर्विहारनिर्गत एवोत्तरां ककुभं गृहीत्वाव्रजम् । अबहुदिवसाभ्यस्तगमनतया च स्तोकमेव गत्वा शिथिलायमानपक्षतिः, परवानेवान्यतमस्य सरस्तीरतरुनिकुञ्जस्योपर्यात्मानममुञ्चम् । अध्वश्रमसुलभां निद्रां चाध्यगच्छम् । चिरादिव लब्धप्रबोधः, अनुन्मोचनीयैस्तन्तुपाशैर्बद्धमात्मानम् , अग्रतश्च पाशविरहितमिव कालपुरुषं परुषं कंचन पुरुषमद्राक्षम्॥

स च चाण्डालो मामादाय पक्कणं नीत्वा कस्यैचन चाण्डालदारिकायै दर्शितवान । सा तु महृष्टतरवदना, "आः

पुत्रक ! प्राप्तोऽसि" इत्यभिदधानैव दारुपञ्जरे मां निक्षिप्या-र्गलितद्वारा तूष्णीमस्थात् ॥

अहं तु प्राणपरित्यागं प्रति कृतनिश्चयो मौनग्रहणमकरवम् । उपनीतेऽपि च पानाशने, तं दिवसमनशनेनैवात्यवाहयम् । अन्येद्युश्चातिक्रामत्यशनकाले, सा स्वपाणिनोपनीय नानाविधानि फलानि सुरभि शीतलं च पानीयम् "क्षुत्पिपासार्दितानां हि पशुपक्षिणां निर्विचारचित्तवृत्तीनामुपनतेष्वाहारेष्वनुपयोगो न संभवत्येव । तत्किमर्थमात्मानं क्षुधा पिपासया च पातयसि" इति स्निह्यन्तीवावोचत् । अहं तु तेन तस्या वचसा विवेकेन च विस्मितान्तरात्मा क्षुत्पिपासोपशमायाशनक्रियामङ्गीकृतवानस्मि । मौनं तु पुनर्नात्याक्षम् ॥

एवमतिक्रामति च काले, एकदा प्रभातायां यामिन्याम् उन्मीलितलोचनोऽद्राक्षमस्मिन्कनकपञ्जरे स्थितमात्मानम् । सकलमेव च तं पक्कणममरपुरसदृशमालोक्य, "किमेतत्" इति कुतूहलात्प्रष्टुकामो यावन्न परित्यजाम्येव मौनम्, तावदेषा मामादाय देवपादमूलं गता । तत् केयम् ? किमर्थं वाहं बद्धः ? बद्धो वा किमर्थमिहानीतः ? इत्यत्र वस्तुनि अहमपि देव इवानपगतकुतूहल एव" इत्यभिधाय वैशम्पायनशुको विरराम ॥

शूद्रकस्तु तच्छ्रुत्वा समुपजाताभ्यधिककुतूहलस्तदाह्वानाय प्रतीहारीमादिदेश । न चिरादेव प्रविश्य सा बभाषे— "भुवनभूषण रोहिणीपते ! सर्वस्त्वयास्य दुर्मतेरात्मनश्च पूर्वजन्मवृत्तान्तः श्रुत एव । अहमस्य दुरात्मनो जननी श्रीः ।

अत्रापि जन्मनि वधूसमीपं प्रस्थितमेनं दिव्येन चक्षुषा दृष्ट्वा अस्य पित्रा समादिष्टास्मि— 'सर्व एव ह्यविनयप्रवृत्तोऽनुतापाद्विना न निवर्तते। तद्यावदिदं कर्म परिसमाप्यते, तावदेनं मर्त्यलोक एव बद्ध्वा धारय। यथा चानुतापोऽस्य भवति, तथा प्रतिविधेयमस्य'इति। तदस्य विनयायेदं विनिर्मितं मया। सर्वमधुना तत्कर्म परिसमाप्तम्। शापावसानसमयो वर्तते। शापावसाने च युवयोः सममेव सुखेन भवितव्यमिति त्वत्समीपमानीतोऽयम्। लोकसंपर्कपरिहाराय च मयात्मनश्चाण्डालजातिः ख्यापिता। तत् अनुभवतं संप्रति द्वावपि सममेव जन्मजराव्याधिमरणादिदुःखबहुले तनू परित्यज्य, इष्टजनसमागमसुखम्" इत्यभिदधानैव झटिति क्षितेर्गगनमुदपतत्॥

अथ राज्ञस्तद्वचनमाकर्ण्य संस्मृतजन्मान्तरस्य काष्ठीभूतदेहस्य झटित्येवारुरोह परां कोटिं कामानलः, राज्ञ एव तुल्यावस्थस्य महाश्वेतोत्कण्ठया पुण्डरीकात्मनो वैशम्पायनस्य च॥

तस्मिन्नेव चान्तरे, तत्संधुक्षणायेव सकलमेव प्रेममयमिव जनयन् जीलोकं परावर्तत सुरभिमासः। कादम्बरी च पर्याकुलितहृदया सायाह्ने स्नात्वा, चन्द्रापीडं जीवन्तमिव निर्भरं कण्ठे जग्राह॥

चन्द्रापीडस्य तु कादम्बरीकण्ठग्रहेण सद्यः सुदूरगतमपि कण्ठस्थानं पुनर्जीवितं प्रत्यपद्यत। एवं च सुप्तप्रबुद्ध इव प्रत्यापन्नसर्वाङ्गचेष्टश्चन्द्रापीडः कादम्बरीमवादीत्— "भीरु! परित्यज्यतां भयम्। प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण।

अत्र तु स मे द्वितीयवारं व्यपगतः शापः । परित्यक्ता सा मया मानुषी शूद्रकाख्या तनुः । एषापि च 'तवास्यां प्रीतिरुत्पन्ना' इति त्वत्प्रीत्या प्रतिपन्ना पालिता च। अपि च, प्रियसख्या अपि ते महाश्वेतायाः प्रियतमो मयैव सह विगतशापः संजातः" इत्यभिदधत्येव चन्द्रापीडशरीरान्तरितवपुषि चन्द्रमसि, तादृशेनैव वेषेण अम्बरतलादवतरन्नदृश्यत कपिञ्जलकरावलम्बी पुण्डरीकः ॥

अथ चित्ररथहंसौ दिष्ट्या वर्धयितुं केयूरको हेमकूटमगमत् । मदलेखापि धावमाना तारापीडस्य विलासवत्याश्च पादयोः पतित्वा "देव! देव्या सह दिष्ट्या वर्धसे । प्रत्युज्जीवितो युवराजः" इत्यानन्दनिर्भरमुच्चैर्जगाद ॥

तारापीडस्तु तच्छ्रुत्वा हर्षपरवशस्तत्रैवागच्छत् । चन्द्रापीडश्च पितरमालोक्य पुरेव चरणयोरपतत् । विलासवती तु तं पुनः शिरसि पुनर्ललाटे पुनश्च कपोलयोश्चुम्बित्वा गाढतरं सुचिरमालिलिङ्ग। उन्मुक्तश्च मात्रा,उपसृत्य शुकनासं पुनः पुनः कृतनमस्कारः, यथानुक्रमं पित्रोः शुकनासस्य मनोरमायाश्च "एष वो वैशम्पायनः" इति पुण्डरीकमदर्शयत । सर्वेषामेव तेषामचेतितैव सा क्षणदा प्रभाता ॥

प्रातरेव च चित्ररथहंसौ तत्राजग्मतुः । आगतयोश्च तयोस्तारापीडशुकनासाभ्यां सहानुभूतसंबन्धोचितसंवादकथयोः सहस्रगुण इव महोत्सवः प्रावर्तत । ततश्चित्ररथश्चन्द्रापीडमादाय हेमकूटमगात । गत्वा च कादम्बर्या सह समग्रमेव स्वं

राज्यं चन्द्रापीडाय न्यवेदयत्, पुण्डरीकायापि सर्वं महाश्वेतया निजपदं हंसः ॥

अन्यदा निर्वृतापि कादम्बरी विषण्णमुखी, चन्द्रापीडमूर्तिं चन्द्रमसमप्राक्षीत्— आर्यपुत्र ! सर्वे खलु वयं मृताः सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च । सा पुनर्वराकी पत्रलेखास्माकं मध्ये न दृश्यते । किं तस्या वृत्तम्" इति । स तु प्रत्यवादीत्— "प्रिये ! कुतोत्र सा । सा हि रोहिणी शप्तं मामुपश्रुत्य मच्चरणपरिचर्यायै मर्त्यलोके जन्माग्रहीत् । इतश्च जन्मान्तरं गच्छता मया बलादावर्ज्यात्मलोकं विसर्जिता। तत्र पुनस्तां द्रक्ष्यसि" इति ॥

एवं चन्द्रापीडस्तत्र दशरात्रं स्थित्वा, श्वशुराभ्यां विसर्जितः पितुः पादमूलमाजगाम । आगत्य च पुण्डरीके समारोपितराज्यभारः, कदाचिज्जन्मभूमिस्नेहादुज्जयिन्याम्, कदाचिद्गन्धर्वराजगौरवेण हेमकूटे, कदाचिद्रोहिणीबहुमानेन चन्द्रलोके, कदाचित्पुण्डरीकप्रीत्या लक्ष्मीनिवाससरसि, कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु तानि तानि न केवलं चन्द्रमाः कादम्बर्या सह, महाश्वेता तु पुण्डरीकेण सह, पुण्डरीकोऽपि चन्द्रमसा सह परस्परावियोगेन सर्व एव सर्वकालं सुखान्यनुभवन्तः परां कोटिमानन्दस्याध्यगच्छन ॥

कादम्बरी समाप्ता ॥

॥ श्रीः ॥

# ॥ पर्यायपदप्रदर्शनम् ॥

प्रातिपदिकम्—Substantive.
विभक्तिः—Case.
सुप्—Case termination.
सुबन्तम्—Noun.
लिङ्गम—Gender.
पुंलिङ्गम्—Masculine gender
स्त्रीलिङ्गम्—Feminine gender
नपुंसकलिङ्गम्—NeuterGender.
वचनम्—Number.
एकवचनम्—Singular.
द्विवचनम्—Dual.
बहुवचनम्—Plural.
रूपनिरूपणम्—Declension.
कर्ता—Subject.
कर्म—Object.
करणम्—Instrument.
संप्रदानम्—The sense of [the dative Case
अपादानम्—The sense of [the ablative case.
अधिकरणम्—The sense of [the locative case.
प्रथमा विभक्तिः—Nominative [case.
द्वितीया—Accusative case
तृतीया—Instrumental ...
चतुर्थी—Dative. ...
पञ्चमा—Ablative ...
षष्ठी—Genitive. ...
सप्तमी—Locative. ...
संबोधनप्रथमा—Vocative. ...
सत्षष्ठी—Genitive Absolute.
सत्सप्तमी—Locative „
धातुः—Root.
नामधातुः—Denominational root.
सकर्मकः—Transitive
अकर्मकः—Intransitive.
लकारः—Tense.
तिङ्—Tense termination.
तिङन्तम्—Finite verb
विकरणम्— Conjugation.
लट्—Present.
लुङ्—Aorist.
लङ्—Imperfect.
लिट्—Perfect.
लुट्—I Future.

लृट्—II Future.
लोट्—Imperative.
विधिलिङ्—Potential.
आशीर्लिङ्—Benedictive.
लृङ्—Conditional.
णिच्—Causal.
सन्—Desiderative.
यङ्—Frequentative.
प्रथमपुरुषः—3rd Person
मध्यमपुरुषः—2nd Person
उत्तमपुरुषः—1st Person
शतृ— ( अत् ) Present participle (Parasm)
शानच् (आन) —Present participle. ( Atm.)
क्तवतु (तवत्)— Active past participle.

क्वसु (वस्)—Perfect participle
कर्मणि क्त (त)—Past passive participle.
क्त्वा (त्वा) } Indeclinable
ल्यप् (य) } past participle.
तुमुन् (तुं)—Infinitive.
प्रयोगः—Voice.
कर्तरि प्रयोगः—Active voice.
कर्मणि प्रयोगः—Passive voice.
भावे प्रयोगः—Impersonal
उपसर्गः—Preposition.
निपातः—Conjunction.
अव्ययम्—Indeclinable.
आदेशः—Substitute.
आगमः—Affix

# GLOSSARY.

*This follows Text order.*

राजधानी—Capital
नाम—Famous
पञ्जर—Cage
शुक—Parrot
आस्थान—Durbar hall
विहंगम—Bird
विस्मय—Amazement
कुतूहल—Curiosity
परिगत—Sorrounded by
पश्चिम—West
शाल्मली—Silk Cotton tree
कोटर—Hollow
स्कन्ध—Branches
निगृह्य—Having checked
प्रत्युषस्—Morning
मृगया—Hunting
क्षोभित—Disturbed
शबर—Hunter
सोपान—Steps
असु—Life
किं कर्तव्यतामूढ:—One who does not know what to do
अन्तराल—Between

शिरोधरा—Neck
अशीर्यन्त—Shattered
पिपासा—Thirst
सिष्णासु:—One desirous of bathing
ललाम—Ornament
अमात्य—Minister
महिषी—Queen
शशिन्—Moon
विकच—Blossomed
निमित्त—Omen
षष्ठीजागर—Sixth night vigil
व्यासङ्ग—Addiction
बलाधिकृत—Commander-in-chief
तुरंगम—Horse
प्रतस्थे—Set off
अयासीत्—Went
बन्दी—A Captive girl
करङ्क—Box
शातक्रतवी—That which belongs to Indra

विजिग्ये—Conquered
पलायमान—Fleeing
अनुबध्यमान—Pursued
उत्प्रेक्ष्य—Guessing
पर्याण—Saddle
उत्थाप्य—Leading it up
उद्गात् —Got out
लेखा—Row
ब्रह्मासन —A posture for meditation
ब्रह्मसूत्र—Sacred thread
उत्सङ्ग—Lap
परिवृत्य—Turning back
सपर्या—Worship
सप्रश्रयम्—Respectfully
विस्रब्ध—Calmly
निभृत—Quietly
लघिमा—Pettiness
अन्वयुङ्क्त—Asked
सवयस्—Friend
मञ्जरी—Bunch of flowers
चपल—Fickle
तरलता—Unsteadiness
समुदपादि—Was born
अक्षमाला—Bedes
व्यतिकर—Juncture
प्रतीकार—Remedy
गर्हित—Contemptible
प्रभवति—Have the power to decide
उद्देश—Place
विप्रकर्ष—Distance
ग्रह—Devil
चिता—Funeral Pile
उपरत—Dead-man
उदपतत्—Rose
कमण्डलु—Waterpot of an ascetic
वल्कल—Bark garment
सङ्ग—Attachment
शुचिता—Cleanliness
उपसान्त्वन—Pacifying words
निर्झर—Rivulet
हत—Wretched
निर्भर—Excessive
वितथ—Vain
संदिश्य—Charging (her) with the message
प्राहिणोत्—Sent
पेशल—Charming
सरल—Simple
श्वस्—Tommorrow
परवान्–Subject to another
नियुज्यताम्—May be employed

उल्लास-Swelled (with joy)
स्मेर—Brightening
विभ्रम—Amourous
आक्षिप्त—Drawn by
सौध—Palace
प्रतीहारी—Door-keeper
नालिकेरसमुद्गक—Cocoanut Shell Casket
उपच्छद—Napkin
पटलक—Plate
ग्रावन्—Stone
परिधाप्य—Asking (him) to wear
शेखर—Chaplet
गभस्ति—Rays
वितान—Canopy
खुर—Hoof
स्कन्धावार—Camp
उद्घाट्य—Having opened
अभिज्ञान—Taken
गात्रयष्टि—Slender body
क्षणदा—Night
जिगमिषु:—He who wishes to go
गुण-Character; Bow-string
कोटि—Crore; Bow-end
हारिणी—She who has a garland; Removing

उपचय—Growth
चतुर—Agreeable
आरुरुक्षन्तम्—Who wished to ascend
उत्कण्ठित—Full of longing
ग्लानि—Drooping
द्रविडधार्मिक—Pujari
प्रवण—Inclined to
सप्तसप्ति—Sun
वल्लभतया—By love
कौलीन—Improper Conduct
चापल—Rash act
मन्यु—Grief
ग्रह—Tenacity
प्रकृति—Nature
निर्वेद—Despondency
पर्याकुल—Perturbed
द्रुघण—Hammer
परापताम:—We return
प्रत्यय—Confidence
दशपुरं यावत्—As far as Dasapura
संभ्रम—Hurry
बाष्प—Tears
अनुरुध्यमान:—Importuned
परिच्छेद— Determination
उद्वेग—Alarm

कटक—Camp
यामिनी—Night
ढौकित—Brought near
अपसर्पण—Going back
क्षुत्—Hunger
आतप—Sun's heat
उज्जागर—Waking
गद्गदिका—Falterig Speech
वराकी—Unfortunate
वचनीयता—Reproch
ज्या—Bow-string
अनुबन्धन—Intention
मुखराग—Red colour of the beak; Amourous look
पक्षपात-Flapping of wings; Being one-sided in argument
आक्रन्द—Crying
आप्लावितवती—Drenched
अस्फुटत्—Burst
मुमुक्षति-Desire to give up
उत्ताम्यन्ती—Panting with ugerness
कर्णिका—Pericarp of a lotus
हताशा—Hopeless
विभावसु—Fire
आमन्त्रये—I take leave of

अङ्क—Lap
आप्याय्यमान—Nourished
उद्विग्न—Sorrowful
पर्यङ्क—Cot
वारद्वयम्—Twice
उद्दाम—Uurestrained
तपस्यत:—Doing penance
संज्ञा—Conciousness
उन्मीलित—Touched up
निर्वृत—Joyful
उत्ताम्यता—Anxious
वार्ताहर—Messenger
ध्रियते—Lives
अभिध्यान—Profound faith
आक्षेप—Attractiveness
विहार—Worship
आश्रव—Obedient
पक्षति—The root of the wing
पक्कण—Chandala quarters
वस्तु—Affair
संधुक्षण—Increasing
श्वशुराभ्याम्—Parents-in-law
दिष्ट्या—Luckily
कोटि—Highest pitch

॥ श्रीः ॥

# ॥ विग्रह व्याकरणविशेषादीनि ॥

धीयते अस्याम् इति = धानी, राज्ञः धानी = राजधानी।

नाम—प्रसिद्धौ अव्ययम्। नामधेयार्थकत्वे 'शूद्रकनामा' इति समस्तं स्यात्।

चाण्डालः-शूद्राद्ब्राह्मण्यां जातः।

मध्यदेशः—"हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विशसनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः ॥"

जॄ + त = जीर्णः। जीर्यति।

अन्यः लोकः = लोकान्तरम्। (अवस्थान्तरं देशान्तरम्)

अगमत् अगमताम् अगमन्। (लुङ्) लटि—गच्छति, लृटि—गमिष्यति।

एकाकी = असहायः। "एकादाकिनिच्चासहाये"

मृगाः यायन्ते (प्राप्यन्ते) अनया अस्यां वा मृगया।

अद्राक्षीत् अद्राष्टाम् अद्राक्षुः। (लुङ्) लटि—पश्यति।

अपगताः असवः येभ्यः ते = अपगतासवः।

पातुम् इच्छा = पिपासा।

स्नातुम् इच्छुः = सिष्णासुः।

अपाययत्—पा (पिब) णिच्-लङ्। लुङि—अपीप्यत्।

क इव पश्यति (दृष्टिविषयो भवति) इति कीदृशः। ईदृशः, तादृशः, यादृशः, भवादृशः, कीदृक्।

अवन्तिषु-अङ्गाः वङ्गाः कलिङ्गा इतिवत् देशवाचितया बहुवचनम्।

क्षीणेन = क्षीणभागेन, भूयिष्ठा = क्षीणभूयिष्ठा। बहु, भूयस्, भूयिष्ठ।

अर्पयांबभूव—ऋ(ऋच्छ)णिच्-लिट्। लटि अर्पयति, लुङि—आर्पिपत्।

पूर्णः मासः अस्यां सा = पौर्णमासी।

तुरेण ( वेगेन ) गच्छतीति = तुरंगमः ।
कञ्चुकी—'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥'
शतं क्रतवः यस्य सः = शतक्रतुः
शतक्रतोः इयम् = शातक्रतवी ।
अभिप्रतस्थे—अभि, प्र + स्था। (लिट् )'समवप्रविभ्यः स्थः।' लटि—संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते ।
विजिग्ये—वि + जि । (लिट् ) लटि— (जयति) विजयते, पराजयते ।
पलायमानम्—परा + अय—आन । (Pr P) लत्वम् ।
अच्छानि उदकानि यस्य तत् = अच्छोदम् ।
उत्थाप्य—उत् + स्था —णिच् –ल्यप् । तिष्ठति, उत्थापयति।
ब्रह्मणः (वेदस्य)सूत्रम् = ब्रह्मसूत्रम् । वेदाध्ययनयोग्यतापादकं सूत्रम् ।
लघोः भावः=लघिमा । अणिमा, महिमा, गरिमा ।

भारतवर्षात् उत्तरेण—"एनपा द्वितीया" इति द्वितीया युक्ता। 'धनपतिगृहादुत्तरेण' इति कालिदासोऽपि । "स्त्र्यधिकारात्परेण" " ततः परेण " इति भाष्यकारप्रयोगात् पञ्चम्यपीति केचित् ।
अद्भ्यः सरतीति, अपसारयति धैर्यमितिवा = अप्सराः । कालिदासादिप्रयोगात् "स्त्रियां बहुष्वप्सरसः" इति प्रायिकमित्याहुः ।
अभ्यजिघ्रम्–अभि + घ्रा(लङ्) लटि—जिघ्रति ।
समानं वयः यस्य सः=सवयाः ।
लोहितं भवति= लोहितायति लोहितायते । अत्र शत्रन्तात्सप्तमी ।
वयसा तुल्यः = वयस्यः ।
प्रारोदीत्— प्र + रुद् ( लङ् ) अरोदीत् अरुदिताम् अरुदन्। लटि–रोदिति रुदितः रुदन्ति। ( स्वपिति श्वसिति अनिति ) लुङि—अरुदत् अरोदीत् ।

उदपादि—उत्+पद् । (लुङ्–प्र–ए) अपादि अपत्साताम् अपत्सत । लटि–पद्यते ।

प्रायच्छत्—प्र+दाण् (यच्छ) लङ् ।

अदात् अदाताम् अदुः ।(लुङ्) लटि–ददाति, लो·म·ए–देहि।

अगाम्—इण् (एति) लुङ् ।

महत् महीयस् महिष्ठ ।

गन्तुम् इच्छुः = जिगमिषुः ।

क्षणं (उत्सवं) ददातीति = क्षणदा ।

आरोपितं पर्याणं यं सः = आरोपितपर्याणः ।

आरोढुम् इच्छन् = आरुरुक्षन्।

धर्मं चरति = धार्मिकः । द्रविडश्चासौ धार्मिकश्च । जरंश्चासौ द्रविडधार्मिकश्च = जरद्द्रविडधार्मिकः ।

सप्त सप्तयः (अश्वाः) यस्य सः = सप्तसप्तिः ।

पूर्वं दृष्टः = दृष्टपूर्वः ।

मोक्तुम् इच्छन् । मुमुक्षन् ।

आप्याय्यमानम्–आ+प्याय्–णिच्–( कर्मणि P.) आन ।

उदतिष्ठत्–'उदोऽनूर्ध्वकर्मणि" आत्मनेपदम्–उत्तिष्ठते (मुक्तौ मनः) ।

उत्स्रक्ष्यसि–उत्+सृज् (लृट्) लटि–सृजति ।

तपः चरति = तपस्यति । (तपस्यन् Pr P.)

ऋते (विना) अव्ययम् । तद्योगे पञ्चमी ।

सत्यं च तत् अभिध्यानं च, सत्ये अभिध्यानं वा = सत्याभिध्यानम्

पक्षयोर्मूले पक्षती । शिथिले भवन्त्यौ शिथिलायमाने । शिथिलायमाने पक्षती यस्य सः = शिथिलायमानपक्षतिः।

तन्तुरूपाः पाशाः = तन्तुपाशाः

विनायोगे–तं विना, तेन विना, तस्मात् विना, इति द्वितीयातृतीयापञ्चम्यो भवन्ति ।

अह्नः सायः = सायाह्नः ।

माता च पिता च = पितरौ ।

दशानां रात्रीणां समाहारः = दशरात्रम् ।

श्वश्रूश्च श्वशुरश्च = श्वशुरौ ।

गृह्यतां दृश्यतां हृष्यताम् ॥

प्रथमकक्ष्यामारभ्य षष्ठकक्ष्यापर्यन्तं पाठनार्हाणि गद्यमयानि पद्यरूपाणि च पुस्तकान्यत्र लभ्यन्ते। मूल्यपादांशः($\frac{25}{\circ}$) उपायनं (कमिषन्) दीयेत।

MANAGER,

**Sri Munitrayamandiram Office,**

*17. Reddirayarkulam Street,*

KUMBAKONAM